Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

काशी-संस्कृत-सीरिज़-पुस्तकमालायाः

७४

5

काव्यविभागे (१०) दशमं पुष्पम्

Proprietor, Bharathi Book Stall, MELKOTE. (Via FRENCH-ROCKS) MYSORE STATE.

श्रीभारविविरचितं—

# किरातार्जुनीयम्

महामहोपाध्यायमल्लिनाथसूरिकृतया 'घण्टापथ' व्याख्यया
पण्डित श्रीगङ्गाधरशर्मकृतया 'सुधा' व्याख्यया च
समलङ्कृतम् ।

( परीक्षोपयोगि १—३ सर्गात्मकम् )

प्रकाशकः—

जयकृष्णदास—हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

विद्याविलास प्रेस, बनारस सिटी ।

चतुर्थ संस्करण ] मूल्य १॥=) [ सं २००३

[ अस्य ग्रन्थस्य सर्वेऽधिकाराः प्रकाशकेन स्वायत्तीकृताः ]

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

॥ श्रीः ॥

श्रीगौरकृष्णः शरणं ममास्तु ।

# उपोद्घातः

अयि साहित्यसुधोदधिं मिमङ्क्षवो विचक्षणाः !

विदाङ्कुर्वन्तु तत्र भवन्तो यदस्मिन् भवे भ्रमन्तोऽनादिकालतो विशेषतः कलुषकषायितस्वान्ताः समस्ता जना निजनिजजन्मनः साफल्यमूलसुखोदर्कं चतुष्टयावाप्तिकरं साधनं समीहन्ते ।

परन्तु श्रममन्तरा तदीयज्ञानं, विना काव्येनान्यैरसुकरमेव, अत एतस्य "काव्यप्रकाशे—

"काव्यं यशसेऽर्थकृते, व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये, कान्तासम्मिततयोपदेशयुजे" ॥

तच्च तावद् द्विविधं—दृश्यं, श्रव्यञ्च तत्र श्रव्यमेव पुरस्कृत्य तत्र भ प्रत्नतमः परमगभीरार्थपरिमितपदोपेतसत्पद्योपपादनपटीयानुद्भटकविर्नाम्ना "भारविः" "महाभारतीयवनपर्वणि" समुदितां सङ्क्षिप्ततरां "महर्षिकृष्णद्वैपाय देशवश्यस्य दिव्यास्त्रलिप्सया तपस्यतो गाण्डीवधन्वनोऽर्जुनस्य कैतवकृतकिरा वेषधारिणा धनुर्धारिणा श्रीशङ्करेण सार्धं संयुध्य; निजाप्रतिमपराक्रमप्रदर्शनेन नः तं सन्तोष्य, पाशुपतप्रभृतिदिव्यास्त्रलाभसम्बन्धिनीं कथामेव स्वप्रतिभाप्रभावे प्रकाशयित्रा समस्त महाकाव्यलक्षणोपेतेनातिविस्तृतेन "किरातार्जुनीय" काव्य रूपेणाचकथत् ।

किन्त्वेतादृशेन महाकविना कस्मिन् समये कतमो जनपदः, कतमा जाति कतमत् कुलञ्चालङ्कृतानि" इति साम्प्रतं निश्चेतुमतीव दुष्करं, तथाऽप्यद्यावा समधिगतकतिपयप्रमाणैरवगतसमयादिकं निरूपयितुं यथाशक्ति प्रयते । तद्यथा– इदानीम् "ऐहोल" शिलालेखे लिखितं

"येनायोजि नवेऽश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म ।
स विजयतां "रविकीर्त्तिः" कविताऽऽश्रित "कालिदास" "भारवि" कीर्त्तिः"॥इति

पद्यमेतत् प्राप्यते । तत्र च "भारवे" र्नामोल्लेखेन शिलालेखसमयात्प्रागे "भारवि" कवेः सत्ता स्वीक्रियते । स च शिलालेखो नवत्युत्तरषट्छततमे(६९०

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मे तथा त्रयस्त्रिंशदधिकषट्छततमे चेशवीये(६३३)वर्षे लिखित इति निःसंशयं
म्मतं मतिमतामैतिह्यविदाम् ।
तेन खिस्ताब्दीयसप्ततमशतकारम्भे "भारवि" कविः "कालिदास" सदृशःप्रसिद्धि-
दवीमनुप्राप्त आसीत् । तथा चैतादृशी प्रसिद्धिस्तदानीन्तनसमये नातिस्वल्पतर-
कालेन सुलभेति सम्भावनातः खिस्ताब्दीयषष्ठशतकात्प्रत्नो "भारवि" रित्यत्र विरो-
धिमानानुपलब्धेर्नास्ति केषाञ्चिदपि संशयलेशावसरोऽपि ।

पुनश्च दक्षिणभूमौ साम्प्रतं समधिगतयाऽदृष्टपूर्वया "अवन्तिसुन्दरीकथा-"
ऽभिधयाऽधिधरणिं श्रवणसरणिं श्रितया पुस्तिकया चैतदपि ज्ञायते । यदियं "श्रीम-
कविवरदण्डि" कृता वस्तुतस्तत् तत्र ग्रन्थकर्त्रा "भारवि"र्मे प्रपितामहस्तथा च
एतस्य "दामोदर" इति पित्रोरुल्लापने नाम, कवितायां "भारवि" रित्युपनाम चा-
सीत्' स च "विष्णुगुप्त" नाम्ना राज्ञा शासितभूमौ स्वीकृतनिवास इत्युल्लिखि-
तम् । तदीयो राज्यसमयः प्रायश ऐतिह्यविद्भिः पञ्चमशतकासन्नवर्त्तीति स्वीक्रियते ।
त्यादिप्रमाणमनुरुन्धानैर्विद्वद्भिरिदमेव निश्चीयते यद् "भारविः" पञ्चमशतके दक्षि-
भुवि तत्रत्ये कस्मिंश्चिद् द्विजकुले लब्धजन्मेति । तदीयकुलविषये पूर्णतया प्रमा-
णान्तरानुपलब्धेरतोऽधिकं किञ्चिद्वक्तुमहं सर्वथा मूक एव ।

अस्तु यद्यप्यस्य महाकाव्यस्य महामहोपाध्याय—कोलाचल—"मल्लिनाथ"
करविरचिता "घण्टापथा" ख्यव्याख्या सतीष्वपि सतीषु विविधासु व्याख्यासु विद्वन्म-
नः सरोजविकासनशोलासु विख्याताऽस्ति । तथाऽपि तस्याःसुकुमारमतीनां "मध्य-
भारवि" परीक्षाऽर्थिनां कृते नातीवोपयोगितया श्रेष्ठिवर "श्रीजयकृष्णदासगुप्त" महाशया-
काव्यहगृहीतचेतसा 'मिथिला' देशान्तर्गत 'चग्नपुर' ग्रामनिवासिना मिश्रोपनाम्ना
पण्डित श्रीगङ्गाधरशर्मणा कृतया 'सुधाऽऽख्य' व्याख्यया सनाथीकृतमेतत् सर्गत्रया-
त्मकमेव, तस्य च विश्वजनीनतया तृतीयसंस्करणस्य पुनर्मुद्रणावसरे तत्प्रार्थनापार-
वश्येन पण्डितपणशीकरोपाव्ह रामचन्द्रशास्त्रिणा यथामति संशोधनं विहितम् । आ-
शासे च यत्र क्वापि किमपि दृष्टिदोषतो बुद्धिव्यामोहतो वाऽपि स्खलनमापतितं
चेत् तद्विद्वज्जनसुलभयोदारतया निर्मत्सरैर्विद्वदग्रेसरैर्मर्षणीयमिति शम् ।

विदुषामेकान्तविनेयतमः—

**श्रीब्रह्मशङ्कर-मिश्रः शास्त्री ।**

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

# अथ संक्षिप्तकथासारः ।

## प्रथमसर्गे ।

### युधिष्ठिरम्प्रति वनेचरस्योक्तिः ।

हे राजन्! चारचक्षुषो राजानो नानुयायिभिर्वञ्चनीयाः, अतो मदुक्तं युक्तमयुक्तं वा त्वया क्षन्तव्यं, यतो हितकरं प्रियं च वचो दुर्लभम्भवति। अधिपस्याशासकः-सुहृद् हितवचनाश्रोताऽधिपश्च निन्द्यौ। यतोऽन्योऽन्यानुरागिष्वेवामात्यनृपेषु सर्वसम्पदस्तिष्ठन्ति। राजचरितं स्वभावतो दुर्ज्ञेयं जन्तवश्चाज्ञानिनो भवन्त्युभयोर्महद्वैषम्यम्, अथापि त्वत्प्रभावादेवास्माकमरिगूढनीतिमार्गज्ञानम्।

### वनेचरस्य वक्तव्योक्तिः ।

सिंहासनस्थोऽपि दुर्योधनो भवतः पराजयभीत्या विमलं यशो विस्तारयति। षड्वर्गविजयी नीत्यनुसरणशीलो दुर्योधनो नक्तन्दिवं विभज्य नीत्या पौरुषं करोति। निरभिमानो दुर्योधनो भृत्येषु मित्रभावं, मित्रेषु बन्धुभावं, बन्धुषु स्वामिभावं लोकान्दर्शयते। समविभक्तधर्मार्थकामसेवकस्य दुर्योधनस्य ते गुणानुरागात्सख्यं प्राप्तवन्त इव परस्परं न बाधन्ते, अपि तु वर्धन्त एव। वशी दुर्योधनो धनलोभात् क्रोधाद्वा न दण्डधारी, किन्तु 'राज्ञो ममायं धर्म' इति बुद्ध्या गुरुशिक्षया शत्रौ पुत्रे वा दण्डयिता। कीर्त्तिमता दुर्योधनेन सर्वतो रक्षिता मही भूरि वसूत्पादयति। कीर्त्तिमन्तस्तेजस्विनो मानिनो धनादृता धनुर्भृतो राजानो दुर्योधनस्य प्राणैः प्रियं कर्तुमिच्छन्ति। अशेषितक्रियो दुर्योधनोऽवञ्चकचरद्वाराऽन्यनृपकार्यं वेत्ति। अस्योद्योगस्तु फलैर्ज्ञायते नान्यथा। अक्रुद्धस्यापिदुर्योधनस्यानुशासनं गुणानुरागिणो राजानः शिरसा वहन्ति। यौवराज्ये दुःशासनं नियुज्य दुर्योधनो मखेषु वह्निं प्रीणयति। यथोच्चरितमन्त्रश्रवणादुरगो व्यथते तथा जनोदीरितभवन्नामाकर्णनादयं व्यथते। हे राजन्! शत्रुप्रतीकारविधाने तत्परो भव, चरोक्तिस्तु प्रवृत्तिसारैव वेदितव्या।

### युधिष्ठिरम्प्रति द्रौपद्युक्तिः ।

हे स्वामिन्! विज्ञेषु स्त्रीजनोक्तमनुशासनमनादर इव भवति, अथापि दुष्टा मनोव्यथा वक्तुं मां प्रेरयन्ति। हे स्वामिन्! स्ववंशजै राजभिरुपार्जिता मही मत्तगजेन मालेव त्वया विनाशिता। हे राजन्! ये मायिषु मायां न कुर्वन्ति ते पराभवं भजन्ते। तीक्ष्णबाणा अनावृतशरीरान् घ्नन्ति। हे राजन्! कोऽन्यःकुलाभिमानी राजा निजवधूमिव लक्ष्मीं त्वामन्तरेणापहारयति। हे राजन्! अग्निः शुष्कं शमीवृक्षमिव निन्दितमार्गस्थं त्वां मन्युः कुतो न ज्वलयति। सफलमन्योरापद्विनाशकस्य च पुंसः सर्वे प्राणिनो वश्या भवन्ति, स्नेहिनो निष्कोपात्पुंसो न कस्यचिद्भयं भवति। हे राजन्! प्राक् पर्यङ्कस्थो भीमः सम्प्रति वनभूमिवर्त्ती सन् भवन्मानसं न पीडयति

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कच्चित । मेरूत्तरवर्त्तिकुरुदेशं विजित्य सुवर्णधनमादाय कोशगृहे स्थापनशीलोऽर्जुनो वल्कलं वसानः सन् भवन्मानसं न दुनोति कच्चित् । वनभूमिशायिनौ वन्यगजाविव यमावेतौ नकुलसहदेवौ पश्यन् धैर्यसन्तोषौ त्यक्तुं कुतो नेहसे । तव बुद्धिं नाहं वेद्मि चित्तवृत्तयो विविधा भवन्ति, भवत्क्लेशाधिक्यं पश्यन्त्या,मम चित्तं मनोव्यथा नितरां पीडयन्ति । पुरा महार्हशयनमधिसुप्तस्य तव स्तुतिगीतमङ्गलनिद्राभङ्गः, साम्प्रतं वन-भूमिमधिसुप्तस्य तवामङ्गलजम्बूकशब्दनिद्राभङ्गः । पुरा द्विजोच्छिष्टान्नभक्षणोपचितं तव वपुः, साम्प्रतं वन्यफलादिभक्षणादतिक्षीणम् । पुरा नृपशिरोमाल्यपरागरक्तं तव चरणद्वयं, सम्प्रति कुशारण्यवर्त्ति जातम् । इमां शत्रुनिमित्तां दशां पश्यन्त्या मम मनोऽतीव खिन्नं, रिपुजनानभिभूतानां पराभवोऽप्युत्सवतुल्य एव भवति । हे राजन् ! शान्तिं त्यज, शत्रुं विनाशाय, पौर्वं तेजो गृहाण, मुनीनामेव शान्त्या जयो भवति, न तु भूभृताम् । भवद्विधाः पुमांसो यदि शत्रुपराभवं सहमानाः प्रसन्नास्तर्हि निरवलम्बो-ऽभिमानो हतः स्यात् । अथ शान्तिमेव सुखसाधनमवगच्छसि चेत्तर्हि नृपचिह्नं धनु-र्विहाय वह्नौ होमं कुरु । हे राजन् ! प्रतीकारक्षमस्य तव नापकारिणि शत्रौ समयप्र-तीक्षणं युक्तं, विजयेच्छवो नृपाः शत्रुषु सव्याजं सन्धिभेदका भवन्ति । यथा प्रातरु-दीयमानं सूर्यं लक्ष्मीः ( दीप्तिः ) अभ्येति, तथा त्वामपि रिपुविनाशोत्तरं लक्ष्मीः ( सम्पद् ) भूयोऽभ्येतु ।

---

## द्वितीयसर्गे ।

### युधिष्ठिरम्प्रति भीमस्योक्तिः ।

ज्ञानचक्षुषा सम्यगालोच्य द्रौपद्युक्तवचनं बृहस्पतेरप्याश्चर्यजनकम् । यथा केन चित्कृताल्पविशेषपरीक्षणे गभीरेऽपि जले प्रवेष्टारो बहवः सन्ति, परीक्षकस्तु विर-लस्तथा नीतिशास्त्रेऽपि सति वक्तरि बोद्धारो बहवो वक्ता तु विरल एव । यथाऽ-ल्पमात्रे । श्रेष्ठभेषजे बहुगुणस्तथा द्रौपदीवचनेऽपि बहुगुणा दृश्यते । एषा द्रौपद्यु-क्तवाणी भवतः प्रीतिदा भवतु, यतो गुणपक्षपातिनां पुंसां न स्त्रीपुंसादिवचने ग्राह्या-ग्राह्यविचारो भवति । हे नृप ! चतुर्विधविद्यापारगामिनी तव मतिर्वैपरीत्यमेत्य, आसा-दितपङ्का करिणीव कुतोऽवसीदति । हे राजन् ! प्राप्तरिपुनिकारं त्वामासाद्य लोकवि-दितमपि पौरुषं नश्यतीति किमतोऽधिकं कष्टम् । ऐश्वर्याभिलाषी विद्वान् दुरवसानं शत्रूदयमुपेक्षेत, फलसम्पदुन्मुखं तत्क्षयं नोपेक्षेत । शीघ्रभाविनं प्रभूतं शत्रुक्षयं चिरभा-विनमल्पमात्मक्षयं विचार्य विद्वानुपेक्षेत, एतद्वैपरीत्येनोपेक्षेत । वर्धनशीलं शत्रुको-शदण्डजं तेजोऽनुत्साहेनापेक्ष्यमाणस्य पुंसो लोकापवादभयादिव सम्पत्तयो द्रुतं नश्य-न्ति । यथोदितं द्वितीयाचन्द्रं जनाः प्रणमन्ति तथा वृद्ध्यर्थमुत्थितं क्षीणमपि सहजं धाम दधतं नृपं प्रजाः प्रणमन्ति । यथा कृष्यादिप्रवृत्तो लोको दैवमनुसरति, तथा नीति-रपि कर्त्तव्ये क्षिप्रकारित्वमनुसरति । उच्चैः पदमारोढुमिच्छोः पुंस आत्मपौरुषमेवा-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वलम्बनम् । अपौरुषं विपदा हन्ति, विपदुपेतमायतिस्त्यजति, निरायतिः पुमान् लघुर्भवति, स च नृपसम्पदास्पदं न भवति । अभ्युदयान्तराय भूतो निरुद्योगो नाश्रयणीयः, यतः पौरुषसाध्यसम्पदां नहि विषादेन सहावस्थानं भवति ।। अथ समयप्रतीक्षणं चेद् धृतराष्ट्रसुतो दुर्योधनश्चिरास्वादितां नृपश्रियं कथं त्यक्ष्यति ? । शत्रुणा दयया समर्पितमात्मनः पदं गृह्णीयाच्चेत्तर्हि तवानुजन्मनां पौरुषशालिनो भुजा विफला भवेयुः । सिंहः स्वयं हतैर्मदवर्षिभिर्गजैरेव जीवति, नान्यहतैस्तथा प्रभावेण जगत्तिरस्कुर्वन्महानपि नान्यतो भूतिमिच्छति । अस्थिरैरसुभिः स्थिरयशश्चिकीर्षतां मानिनां, विद्युच्चपला श्रीरप्रयासलभ्या । जनो भस्म स्पृशति, न तु प्रदीप्तमग्निं स्पृशति, यतो मानिनोऽभिभवशङ्कया प्राणं त्यजन्ति, न तु तेजस्त्यजन्ति । सिंहो गर्जतो मेघान् किमर्थमभियाति, यतो महतामेष स्वभावो यदन्योन्नतिं न सहते । हे राजन् ! अतः प्रमादजं मोहं विहाय पौरुषं कुरु ?

## भीमम्प्रति युधिष्ठिरस्योक्तिः ।

दर्पणे यथा विमलाऽऽकृतिर्दृश्यते, तथा वाग्विस्तरे तव मतिर्विमला दृश्यते । त्वदुदीरितपदानि स्फुटानि, अर्थगौरवयुक्तानि रचितपृथगर्थानि च सन्ति । त्वदुक्ता शास्त्रसिद्धा युक्तियुक्ता प्रतिभाति, इत्थं वचस्त्वदन्यः को वक्तुं जानाति ? । त्वया पराक्रमपक्षे निर्णीतेऽपि मे हृदयं निर्णयमेवानुसरति, विशेषसम्पदो न सुप्रतीतिजनिका भवन्ति । कार्यं सहसा न विधेयम्, अविवेकः परमदुःखमुत्पादयति, यतः सम्पदो विवेकिनमेवानुसरन्ति । विवेकिनामेव क्रियासाफल्यं, नेतरेषां क्रियासाफल्यं भवति । शुचि श्रुतं वपुर्भूषयति, प्रशमश्च तदलंकरणं, स च पराक्रमयुक्तः साधुः, पराक्रमश्च नीत्यनुसरणशीलः साधुः । यथा दोषोऽर्थदर्शनं कुरुते तथा शास्त्रमपि विवेकिनामज्ञानोपहतकार्येऽर्थदर्शनं कुरुते । सन्मार्गवर्त्तिनां दैवनिर्मित्तकोऽनर्थोऽपि समुन्नतिसदृशो भवति । क्रोधहीना जिगीषवः फलसिद्धिं विचार्य पौरुषं कुर्वन्ति । उदयाभिलाषी बुद्ध्या क्रोधमपहरेत्, सूर्योऽपि निशातमो विनाश्योदयते । कृष्णपक्षे चन्द्रकला इव क्रोधिनां सम्पदा विनश्यन्ति । सूर्य इव यो नृपो यथाऽवसरं मार्दवतैक्ष्ण्ये धारयति, स सकललोकाधिष्ठाता भवति । जितेन्द्रियाणामेव श्रियो वश्या भवन्ति, अतः कोपस्त्याज्यः । आकालिककोपविधानात्त्वया समुद्रो विशेष्यते । शास्त्राध्ययनं कृत्वाऽपि ये कामादिशत्रून्न दूरीकुर्वन्ति, ते श्रियश्चापल्यदोषमुत्पादयन्ति । अक्षमा भवन्तं नीतिसिद्धेः पृथक् कर्त्तुमर्हति शान्तितुल्यमन्यत्साधनं लोके नास्ति । मानिनो वृष्णयोऽस्माऽन्विहाय न दुर्योधनपक्षपातिनो भविष्यन्ति । आत्मजीवनार्थमेव ते साम्प्रतं दुर्योधनानुयायिन सन्ति । यथाः सूर्यः कमलानि प्रविघटयति तथा मभायं पराभव एव तान् राज्ञा भेत्स्यति । मदोद्धतो दुर्योधनः स्वयमेव तान् भेत्स्यति, साधारणोऽप्यनादरं न सहते, राजसमूहस्तु नैव सहते । विभूतयो मानिनां मदं वर्धयन्ति । अभिमानशाली नृपो मूढो भवति, मूढस्तु नयाद्वियुज्यते, नयहीनश्च विरागहेतुर्भवति यथा

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वायुप्रेरितो जर्जरितमूलो महानपि वृक्ष उन्मूलयितुं शक्यस्तथा क्षमावता तादृशः— शत्रुरप्युन्मूलायतुं शक्यः। यथा पर्वतोत्थोऽग्निरखिलं भूधरं दहति तथा सचिवादि-विरागजोऽनलो नृपं दहति। मतिमान् पुरुषो दुर्विनीतस्य शत्रोरुन्नतिमुपेक्षेत, तादृशः-शत्रुः क्वचिच्छिद्रे जेतुं शक्यो भवति, यतो दुर्विनीतानां सम्पत्तयो दुःखावसाना-भवन्ति। यथा नदीवेगः शिथिलं कूलं हरति, तथा मित्रादिविरुद्धं सचिवादिविरुद्धं-च नृपसमूहं शत्रुर्हरति।

---

## तृतीयसर्गः।

### व्यासमुनिम्प्रति युधिष्ठिरस्योक्तिः।

हे मुने ! अकृतपुण्यैरलभ्या रजोगुणहीना फलोत्पादिका चैषा भवद्दर्शनसम्पद् असमयवृष्टितुल्या। हे मुने ! अद्य मदीयाः सकलाः क्रियाः सफलाः, ब्राह्मणाश्च सत्या-शिषः, भवदागमनादहं जगत्सु बहुयोग्यो जातः हे मुने ! सफलं ब्रह्मणो दर्शनमिव भवद्दर्शनं श्रीसम्पादकं पापनाशकं कीर्त्तिजनकञ्च। हे मुने ! चन्द्रेऽप्यप्राप्तसुखं मदीयं चक्षुर्भवति सुखमेति, त्यक्तबन्धुवियोगखेदं चेतश्च त्वत्सविधे प्राणितीव। हे मुने ! निःस्पृहाणां मदायत्तं किमिति प्रश्नावकाशो निरस्तः, अथापि कल्याणकरं त्वद्वचनं श्रोतुमिच्छा मां वक्तुं प्रेरयति।

### युधिष्ठिरम्प्रति व्यासस्य प्रत्युक्तिः।

भूतिमिच्छतां जनानां बन्धुषु तुल्यरूपा वृत्तिः, तपोधनानां तु विशेषरूपेण बन्धुषु तुल्यरूपा वृत्तिर्भवति। हे नृप! मदीयं चेतस्तव गुणैर्वशीकृतं, यतो मुमुक्षूणामपि सा-धुजनेषु स्नेहो भवति। यूयं धृतराष्ट्रस्य सुता एव, गुणैर्दुर्योधनमतिक्रान्ता एव, अथापि विषयाभिलाषी धृतराष्ट्रो मोहाद् युष्मांस्त्यक्तवान्। दुर्योधनस्यार्थसिद्धिर्नङ्क्ष्यत्येव यतो दुर्जनसंसर्गो विपत्स्थानं भवति। सभायां दुःशासनेन स्त्रीकेशादिग्रहणे कृतेऽपि तद् दुराचारं सोढवता त्वया साधु कृतम्। ते दुर्योधनादयो भवतो व्याजात्स्वकीयं विध्वंसं विधाय त्वन्मतिशीलयोः ख्यापनेनोपकारिण इव वर्त्तन्ते। पृथ्वीपराक्रमेण ल-भ्या, शत्रुश्च वीर्यास्त्रबलैरधिकः, अतः करणादाधिक्यार्थमुपायो विधीयतां, सङ्ग्रामे जयलक्ष्मी, प्रकर्षाधीना भवति। अम्बिकास्वयंवरे भीष्मपराजितः परशुरामः शौर्यादि-गुणानामाश्रयाधीनमुत्कर्षं जानाति स्म। यमोऽपि यं भीष्ममवलोक्य स्वं पराजित-मिव मन्यते स भीष्मो रणे सर्वेषां मनो भययुक्तं कर्त्तुं शक्नोति। कालाग्नितुल्यं द्रोणं दृष्ट्वा के ? युष्मत्पक्षीया रणे स्थातुं शक्नुवन्ति। राधासुतं कर्णं निरीक्ष्य यमोऽपि बि-भेति। यथा विद्यया, कठिनां तपस्यां कृत्वा दुर्लभं वीर्यमवाप्य कपिकेतनोऽर्जुन एतान् विनाशयिष्यति। हे नृप ! हे दानपात्रभूत ! तां विद्यां दातुमिहागतोऽस्मि।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.


### अर्जुनम्प्रति मुनेरुक्तिः ।

अनेन मदुपदिष्टयोगेन विवृद्धतेजास्त्वं गृहीतास्त्रः सन् मुनीनामाचारं कुरु । यत्र स्थाने तपः करिष्यसि तत्स्थानमेव यक्षस्त्वां नेष्यति ।

### अर्जुनम्प्रति द्रौपदीवाक्यम् ।

शत्रुकपटपङ्के मग्नां योग्यतामुद्धरिष्यमाणस्त्वं तपःसिद्धिपर्यन्तं मां विनोत्कण्ठितो मा भूः । अभिनिवेशवतामुद्योगिनामङ्कं सिद्धिः स्वयमुपैति । तेजस्विनां मानहानिस्तु प्राणहानिप्राया भवति । तेजस्विनो रिपुपराजिताश्चेत्तर्हि कीर्त्तिं नाशयन्ति । दिनावशेषो यथाऽर्कत्विषां दैर्घ्यं नाशयति, तथाऽरिपराजितः स्वचिरावस्थितिनाशयति । शत्रुकृतं निकारं स्मर्त्तुमपि न शक्नोमि, किमनुभवितुं, स निकारस्त्वां विना हृदयं क्लेशयिष्यति । यथा दन्तभ्रंशाद्दन्ती विकृतो भवति, तथाऽभिमानभ्रंशाद्विकृतस्त्वं मेघाच्छन्नो दिनादिरिव न प्रत्यभिज्ञायसे । अस्त्रैरवभासमानाऽपि त्वं यशःक्षयात् क्षीणजलार्णव इवान्याकृतिमापन्नोऽसि । दुःशासनाकृष्टकेशैस्तिरस्कृतवीर्यस्त्वं स एव धनञ्जयोऽसि कच्चित् । त्राणकारी क्षत्रियः, कार्यं कर्त्तुं समर्थं कार्मुकम्, इत्युभयं रिपुविनाशमन्तरेण विफलं करोषि । हे पार्थ ! भूतिकाङ्क्षिणस्तव गुणा अस्माकं सरूपतां भजन्ते । नागैराक्षिप्तकेशरं सिंहमिव दीप्त्या दिनश्रीस्तिग्मरश्मिमिव त्वामियं धूराशा । यः क्रियाभिर्योग्यतां सफलां करोति, तं पूरणीसङ्ख्या नोपैति । हे पार्थ ! जयाय प्रयातस्य तवेन्द्रोऽन्तरायं हन्तु । हे स्वामिन् ! अतो महर्षेर्व्यासस्य वचनं कुर्वन्नस्माकं मनोरथान् सफलय, कृतकार्यमेव त्वामालिङ्गितुमिच्छामि ॥ इति ॥

---

## हिन्दी–संक्षिप्त कथा ।

### प्रथम सर्ग ।

### ( युधिष्ठिर के प्रति वनेचर की उक्ति )

जब कि महाराज युधिष्ठिर जूये में हार जाने से भाइयों ( भीम, अर्जुन, नकुल, सहदेव ) तथा पत्नी ( द्रौपदी) के साथ द्वैतवन नामक जङ्गल में निवास करते थे, उस समय उन्होंनें दुर्योधन का समाचार जानने के लिये एक वनवासी ( किरात–वनेचर ) को ब्रह्मचारी के वेष में भेजाथा, वह सब हाल जानकर महाराज युधिष्ठिर के पास आया और कहने लगा कि—हे महाराज !

दुर्योधन इस समय यद्यपि राजसिंहासन पर बैठा है तथाहि जङ्गल में रहने वाले

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



आप से डरता हुआ ( जिसे जूये में छल से जीता है उस ) राज्य का नीति-पूर्वक शासन कर रहा है, और वह काम-क्रोधादिक ६ अन्तः शत्रुओं को जीतकर नीति का अनुसरण करता हुआ समयका विभाग कर के सब कार्य करता है। तथा नौकरों के साथ मित्रभाव, मित्रों के साथ बन्धुभाव, और बन्धुओं के साथ स्वामिभाव निरभिमान होकर दिखलाता है, और 'मैं राजा हूं, मेरा यही धर्म है' ऐसा समझता हुआ शत्रु या पुत्र जो हो उसे धर्मशास्त्रानुसार दण्ड देता है।

और वह जहां जैसी आवश्यकता होती है वैसा सामदानादि का प्रयोग करता है, और उसके यहां बड़े २ राजा लोग आकर दरबार में कर देते हैं तथा जो आदेश करता है उसे सब प्राणपण से पूरा करते हैं, उसके राज्य में सर्वत्र कृषि उत्तमरूप से होती है, और प्रजा प्रसन्नता से समय २ पर कर देती है, और विश्वस्त गुप्तचरों के द्वारा दूसरे राजाओं का गुप्त समाचार जानता रहता है; उसका उद्योग कार्य होने पर लोग जान पाते हैं। वह दुःशासन को युवराज बनाकर स्वयं यज्ञादि करता रहता है, फिर भी किसी से जब आकर नाम सुनता है तब मन में बहुत दुःखी होता है। इसलिये अब आप उसे जीतने के लिये कोई प्रबल उपाय करें। इसके बाद युधिष्ठिर महाराज ने उसे पारितोषिक देकर विदा करके उक्त समाचार भीमादि के सामने द्रौपदी से जाकर कहा, उसे सुनकर द्रौपदी ने कहा—

## ( युधिष्ठिर के प्रति द्रौपदी की उक्ति )

हे नाथ! यद्यपि स्त्रीका उपदेश पुरुषों के लिये अनादर सा होता है तथापि क्या करूं मेरी आन्तरिक व्यथा मुझे कहने के लिये बाध्य कर रही है अतः आप क्षमा करियेगा। हे महाराज! भला बताइये तो—आपके विना कौन ऐसा राजा होगा जो कि—अपनी स्त्री के समान राजलक्ष्मी को दूसरे के अधीन कर देगा। हा! देखिये ये वही भीम हैं जो पहले सुन्दर पलङ्ग पर सोते थे आज जमीन पर सोते हैं, और जिन्होंने उत्तर कुरु देश को जीतकर बहुत सा स्वर्ण लाकर खजाने में रक्खा था वेही अर्जुन आज वल्कल पहने हुए हैं और ये दोनों सुकुमार सुन्दर नकुल तथा सहदेव कठिन भूमि में सोते हैं इन सबों को इन हालतों में देखकर भी आप धैर्य और सन्तोष को नहीं छोडते हैं यह बड़े आश्चर्य की बात है, आपकी दुर्दशा देखकर मुझे तो अत्यन्त दुःख हो रहा है।

हे महाराज! आप अब शान्ति को छोड़कर शत्रुओं को नष्ट करने के लिये अपना पुराना तेज धारण करिये, क्योंकि शान्ति से मुनियों का कार्य होता है न कि राजाओं का, यदि आप शान्ति ही को सुख का साधन समझते हैं तो राज-चिह्न धनुषादि को त्यागकर जटा बढ़ाकर केवल मुनियों की भांति अग्निहोत्र किया करें।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.


हे महाराज ! सब प्रकार से समर्थ होते हुए भी शत्रु-विजय के लिये आपका समय की प्रतीक्षा करते रहना उचित नहीं है क्योंकि विजय चाहने वाले राजा लोग समय पड़ने पर किसी न किसी व्याज से सन्धि को भी तोड़ देते हैं ।

---

## द्वितीयसर्ग ।

### ( युधिष्ठिर के प्रति भीम की उक्ति )

इस प्रकार से अपने मनोनुकूल द्रौपदी की बातें सुनकर भीम युधिष्ठिर जी से बोले—

हे महाराज ! द्रौपदी ने इस समय जो कहा वह उचित कहा, ये बातें बृहस्पति को आश्चर्य में डाल देने वाली हैं. इसे स्त्री की कही हुई समझकर आपको उपेक्षा करना उचित नहीं है क्योंकि गुणग्राही पुरुष, स्त्री या पुरुष का विचार नहीं करते । बड़े खेद की बात है कि आप देवताओं को भी आश्चर्य में डालनेवाले पुरुषार्थ को पाकर भी दुश्मनों द्वारा दुर्दशा भोग रहे हैं, शत्रु को बढ़ते हुए देखकर भी उसकी उपेक्षा करना अत्यन्त अनुचित है । यद्यपि आप इस समय क्षीण हैं तथापि जब उन्नति के लिये चेष्टा करेंगे तो प्रजायें आपके उत्साह को देखकर आपको नमन करेंगी, यदि अवधि की प्रतीक्षा करते रहियेगा तो निश्चय समझिये कि दुर्योधन इतने दिनतक राज्यसुख-भोगकर आपको अवधि बीतने पर दे देगा यह असम्भव है । अतः आलस्य छाड़ कर पुरुषार्थ करिये आपके उठते ही शत्रुओं पर विपत्तियां आ पड़ेगीं आपके दिग्विजयी चारो भाइयों के तेज को भला शत्रुओं के मध्य में कौन है जो सह सकेगा । इस भांति अत्यन्त क्रुद्ध भीमसेन की बातें सुनकर मतवाले हाथी की भांति उन्हें धीरे २ शान्त करने के लिये महाराज युधिष्ठिर चेष्टा करते हुये बोले—

### ( भीम के प्रति युधिष्ठिर की उक्ति )

हे भीम ! तुमने जो कुछ कहा, समयोचित शास्त्र-सङ्गत ही कहा, तथाऽपि मेरा मन विचार-पूर्वक कार्य करने को कहता है । असमय में क्रोध करना अत्यन्त अनुचित है, शान्ति से बढकर उत्तम साधन कोई नहीं है, इसके रखने से शत्रु स्वयं नष्ट हो जाते हैं । और यदि इस समय नियम तोड़कर चढाई न की जाय तो जितने राजा हैं वे सब अवधि के बाद हमारी सहायता करेगें । और यह समझना कि अधिक समय हो जाने-पर राजा लोग दुर्योधन के पक्ष में हो जायंगें तो यह भूल है अहङ्कारी मनुष्य की सेवा में जो लोग रहते हैं वे लोग जब समय पड़ता है तब उसे छोड़ देते हैं, क्योंकि उसके दुर्व्यवहार से मनमें सभी अप्रसन्न रहते हैं । अतः जबतक अवधि है तबतक शान्ति के साथ समय बिताना उचित है । इस प्रकार से जब युधिष्ठिरजी भीम को

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.


समझा रहे थे ठीक उसी समय दैवात् व्यास जी पहुंच गये, उन्हें देखते ही सभोने उठकर स्वागत किया तथा आदर से लाकर उच्च आसन पर बैठाया पश्चात् अपने भी आज्ञा पाकर हाथ जोड़कर सम्मुख बैठगये ।

---

## तृतीयसर्ग ।

इसके बाद युधिष्ठिर ने कहा कि—हे मुने ! आपका दर्शन विना पुण्य के नहीं मिलता, हमारा यज्ञादिक करना आज सफल हो गया, और मेरे समस्त पाप नष्ट हो गये अब मेरा दुःख दूर हो जायगा, यद्यपि आप ऐसे निःस्पृहों का कोई प्रयोजन मुझसे न होगा तथापि आपकी बातें सुनने में आयेंगी अतः पूछता हूं कि क्या आज्ञा है ?

### ( युधिष्ठिर के प्रति व्यास की उक्ति )

यद्यपि मेरी दृष्टि तुमलोगों तथा दुर्योधनादिकों पर समान रूप से है तथापि तुम-लोगों के सद्गुणों से मेरा चित्त विशेष रूपसे आकृष्ट रहता है अत एव तुमलोगों की दुर्दशा देखकर कुछ कल्याण कारक उपदेश करने आया हूं क्योंकि मोहान्ध धृतराष्ट्र ने सब प्रकार से योग्य तुम्हें छोड़कर दुर्योधन को ही मानता है, और उसी के हाथमें समस्त राज्यभार दे दिया है किन्तु दुर्योधन को दुर्जनों का संसर्ग है अतः वह अवश्य नष्ट होगा, और तुमने सभा में द्रौपदी के वस्त्र हरने के समय भी जो क्रोध नहीं किया वह बहुत अच्छा किया, इससे सर्वत्र दुर्योधन की ही निन्दा हुई न कि तुम्हारी । हे राजन् ! संग्राम में उसी की जय होती है जिस के पास सेना तथा अस्त्रादिक का विशेष बल है, यह बात परशुराम के साथ युद्ध करने में भीष्म ने उन्हें पराजित करके लोगों को दिखला दी है । और यमराज से भी नहीं डरनेवाले भीष्म तथा कर्ण एवम् प्रलयकालाग्नि के समान युद्ध में भयङ्कर द्रोणाचार्य आदि योद्धागण सब दुर्योधन के पक्ष में हैं अतः उन सबों को जिनसे जीत सकें उन दिव्य-अस्त्रों को पाने के लिये मैं अर्जुन को एक मन्त्र बतलाता हूं जिसके द्वारा वे कठिन तपस्या कर इन्द्र भगवान् को प्रसन्नकर दिव्य अस्त्र तथा पराक्रम प्राप्तकर युद्ध में विजयी हों, बस यही मेरे आने का उद्देश्य है, ऐसा कह व्यासजी पुनः अर्जुन से कहने लगे कि—हे अर्जुन ! तुम अब मेरे कथनानुसार साथ में अस्त्रों को भी लिये हुए मुनियों की भांति जाकर तपस्या करो, और जहां पर तपस्या करनी है वहां पर यह यक्ष तुम्हें शीघ्र ही पहुंचा देगा ऐसा कहकर जैसे ही व्यास जी अन्तर्धान हुए वैसे ही अर्जुन के पास यक्ष उपस्थित हो गया तब उन्हें जाने के लिये उद्यत देख द्रौपदी अर्जुन से कहने लगी कि—

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



## ( अर्जुन के प्रति द्रौपदी की उक्ति )

जबतक तपस्या पूरी न हो तबतक आप हमलोगों के बिना व्यग्र न होना क्योंकि बिना दृढ़ आग्रह के कोई कार्य सिद्ध नहीं होता, और उन्हें तपस्या के लिये उत्तेजित करने के लिये। पुनः कहने लगी कि-संसार में तेजस्वी पुरुषों की मान-हानि प्राण-हानि के तुल्य ही होती है, शत्रु से पराजित रहने पर उनका अपमान होता है और शत्रुओं ने जो जो दुर्व्यवहार किये हैं और जिन्हें कि-मैं स्मरण भी नहीं करना चाहती, आज मुझे वे ही सब तुम्हारे बिना यद्यपि और भी कष्ट पहुंचायेंगें तथापि उन सबों को इस आशा से सहूंगी कि आप शीघ्र ही शत्रुओं को जीतने योग्य सामर्थ्य प्राप्तकर पुनः मिलेगें। अतः अब आप तपस्या के लिये जायं और आप के समस्त विघ्नों को इन्द्र भगवान् दूर करें, हे नाथ! आप व्यास जी का आदेश पालन करते हुए हमलोगों के मनोरथ को सफल करें। और अब आपको कृतकार्य देखकर पुनः आनन्द से आलिङ्गन करना चाहती हूं। तब इन सब बातोंको सुनकर अर्जुन कोदुर्योधनादिकों के ऊपर अत्यन्त क्रोध हुआ, और वह कवच पहनकर तलवार, धनुष, और तरकश लेकर यक्ष के बताये हुये रास्ते से इन्द्रनील पर्वत पर तपस्या करने के लिये चल पड़े, और सब लोगों को उनके जाने पर अत्यन्त दुःख मालूम पड़ने लगा पर समझाकर किसी भांति अपने २ चित्त को शान्त किया, और उस समय मङ्गल सूचक दिव्य दुन्दुभी शब्द तथा आकाश में पुष्प वर्षा होने लगी जिसे देखकर सब अत्यन्त प्रसन्न हुये।

॥ इति ॥

---

प्राप्तिस्थानम्—

चौखम्बा-संस्कृत-पुस्तकालय,

बनारस सिटी।

१९४६ ई०

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

॥ श्रीः ॥

महाकविश्रीभारविप्रणीतं—

# किरातार्जुनीयम्

मल्लिनाथकृतघण्टापथव्याख्यया, श्रीगङ्गाधरमिश्रकृत—
सुधाव्याख्यया च समेतम् ।

## प्रथमः सर्गः ।

अर्धाङ्गीकृतदाम्पत्यमपि गाढानुरागि यत् । पितृभ्यां जगतस्तस्मै कस्मैचिन्महसे नमः ॥
आलम्बे जगदालम्बं हेरम्बचरणाम्बुजम् । शुष्यन्ति यद्रजःस्पर्शात्सद्यः प्रत्यूहवार्धयः ॥
तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे । यत्प्रकाशात्प्रलीयन्ते मोहान्धतमसश्छटाः ॥
वाणीं काणभुजीमजीगणदवाशासीच्च वैयासकी–मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाचकलयद्रहस्यमखिलं यश्चाक्षपादस्फुरां लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥
मल्लिनाथकविः सोऽयं मन्दात्मानुजिघृक्षया । तत्किरातार्जुनीयाख्यं काव्यं व्याख्यातुमिच्छति ॥

नारिकेलफलसम्मितं वचो भारवेः सपदि तद्विभज्यते ।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम् ॥

नानानिबन्धविषमैकपदैर्नितान्तं साशङ्कचङ्क्रमणखिन्नधियामशङ्कम् ।
कर्तुं प्रवेशमिह भारविकाव्यबन्धे घण्टापथं कमपि नूतनमातनिष्ये ॥

इहान्वयमुखेनैव सर्वं व्याख्यायते मया । नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥

अथ तत्रभवान् भारविनामा कविः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे' ॥ इत्याद्यालङ्कारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयःसाधनताम्, 'काव्यालापांश्च वर्जयेत्' इति निषेधशास्त्रस्यासत्काव्यविषयतां च पश्यन्किरातार्जुनीयाख्यं महाकाव्यं चिकीर्षुश्चिकीर्षितार्थाविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनत्वात् 'आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखम्' इत्याद्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च वनेचरस्य युधिष्ठिरप्राप्तिरूपं वस्तु निर्दिशन्कथामुपक्षिपति—

**श्रियः कुरूणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।**
**स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः ॥१॥**

**श्रिय इति ।** आदितः श्रीशब्दप्रयोगाद्वर्णगणादिशुद्धिर्नात्रातीयोपयुज्यते । तदुक्तम्—'देव-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation, Kolkata. Digitization: eGangotri.


तावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा' इति । कुरूणां निवासाः कुरवो जनपदाः । 'तस्य निवासः' इत्यण्प्रत्ययः । जनपदे लुप् । तेषामधिपस्य सम्बन्धिनीम् । शेषे षष्ठी । श्रियो राजलक्ष्म्याः । कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी । पाल्यतेऽनयेति पालनी ताम् । प्रतिष्ठापिकामित्यर्थः । प्रजारागमूलत्वात्सम्पद इति भावः । 'करणाधिकरणयोश्च' इति करणे ल्युट । 'टिड्ढाणञ्—' इत्यादिना ङीप् । प्रजासु जनेषु विषये । 'प्रजा स्यात्सन्ततौ जने' इत्यमरः । वृत्तिं व्यवहारं ज्ञातुं यं वनेचरमयुङ्क्त नियुक्तवान् । वर्णः प्रशस्तिरस्यास्तीति वर्णी ब्रह्मचारी । तदुक्तम्—'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्' । एतदष्टविधमैथुनाभावः प्रशस्तिः । 'वर्णाद्ब्रह्मचारिणि' इतीनिप्रत्ययः । तस्य लिङ्गं चिह्नमस्यास्तीति वर्णिलिङ्गी । ब्रह्मचारिवेषवानित्यर्थः । स नियुक्तः वने चरतीति वनेचरः किरातः । 'भेदाः किरातशवरपुलिन्दा म्लेच्छजातयः' इत्यमरः । 'चरेष्टः' इति टप्रत्ययः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । विदितं वेदनमस्यास्तीति विदितः । परवृत्तान्तज्ञानवानित्यर्थः । 'अर्श आदिभ्योऽच्' इत्यच्प्रत्ययः । उभयत्रापि 'पीता गावः' 'भुक्ता ब्राह्मणाः' 'विभक्ता भ्रातरः' इत्यादिवत्साधुत्वम् । न तु कर्तरि क्तः । सकर्मकेभ्यस्तस्य विधानाभावात् । अत एव भाष्यकारः—अकारो मत्वर्थीयः । विभक्तमेषामस्तीति विभक्ताः । पीतमेषामस्तीति 'पीताः' इति सर्वत्र । अथवोत्तरपदलोपोऽत्र द्रष्टव्यः । विभक्तधना विभक्ताः पीतोदकाः पीता इति । अत्र लोपशब्दार्थमाह कैयटः—"गम्यार्थस्याप्रयोग एव लोपोऽभिमतः । 'विभक्ता भ्रातरः' इत्यत्र च धनस्य यद्विभक्तत्वं तद् भ्रातृषूपचरितम् । 'पीतोदका गावः' इत्यत्राप्युदकस्य पीतत्वं गोष्वारोप्यते" इति । तद्वदत्रापि वृत्तिगतं विदितत्वं वेदितरि वनेचर उपचर्यते । एतेन 'वनाय पीतप्रतिबद्धवत्साम्' 'पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु' एवमादयो व्याख्याताः । अथवा विदितवान् । सकर्मकादप्यविवक्षिते कर्मणि कर्तरि क्तः । यथा 'आशितः कर्ता' इत्यादौ । यथाऽऽहुः—'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' । इति । द्वैतवने द्वैताख्ये तपोवने । यद्वा द्वे इते गते यस्मात्तद्द्वीतम् । तच्च तद्वनञ्च तस्मिन् । शोकमोहादिवर्जित इत्यर्थः । युधि रणे स्थिरं युधिष्ठिरं धर्मराजम् । 'हलदन्तात्सप्तम्याः संज्ञायाम्' इत्यलुक् । 'गवियुधिभ्यां स्थिरः' इति षत्वम् । समाययौ सम्प्राप्तवान् । अत्र 'वने वनेचरः' इति द्वयोः स्वरव्यञ्जनसमुदाययोरेकदैवावृत्त्या वृत्त्यनुप्रासो नामालङ्कारः । अस्मिन्सर्गे वंशस्थवृत्तम् । तल्लक्षणम्—'जतौ तु वंशस्थमुदीरितं जरौ' इति ॥ १ ॥

या नीलाम्बुदसन्निभा भगवती संसारतापान्विता-
स्सद्यश्श्वलदृष्टिकोणकिरणैरालोक्य गर्जद्गिरा ।
कारुण्यायामृतधारया विदधती मोदान्वितान् प्राणिनो
भक्तत्राणपरायणा विजयते जाग्रत्प्रभावा शिवा ॥

**अन्वयः**—कुरूणाम्, अधिपस्य, श्रियः, पालनीं, प्रजासु, वृत्तिम्, वेदितुम्, यम्, अयुङ्क्त, सः, वर्णिलिङ्गी, विदितः, वनेचरः, द्वैतवने, युधिष्ठिरं, समाययौ ॥ १ ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



**सुधा**—कुरूणाम् = कुरुसंज्ञभूपनिवासप्रसिद्धदेशानाम्, यथोक्तं शब्दकल्पद्रुमे—'कुरुः धार्त्तराष्ट्रपाण्डवानां पूर्वपुरुषः'। यथा—"योऽजमीढसुतस्त्वन्यऋक्षः सम्वरणस्ततः तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः। परीक्षित् सुधनुर्जह्नुर्निषधाश्वः कुरोः सुताः।" अत्र कुरुसंज्ञदेशानाभिति न युक्तम्, यतः कुरुवर्षन्तु सिद्धपुरसमीपे वर्त्तते, तत्तु भारतवर्षान्तर्गतं न, प्रत्युत भारतदेशादुत्तरस्यां किन्नर–हरिवर्ष–रम्यक–हिरण्मयवर्षेभ्योऽनन्तरं कुरुवर्षमस्तीति सिद्धान्तशिरोमणेर्गोलाध्याये भुवनकोशे भास्कराचार्यैरन्यैश्च भूगोलवर्णनशीलैरवर्णि। अधिपस्य = स्वामिनः, दुर्योधनस्येति शेषः। श्रियः = राजसम्पदः, सम्बन्धिनीं, पालनीं=सकलनियमसेविनीं, प्रजासु=जनेषु तद्राष्ट्रान्तर्गतेष्विति शेषः। वृत्तिम् = व्यवहारम्, वा वार्त्ताम्, वेदितुम्=विज्ञातुम्, यम्=अज्ञातनामानम्, वनेचरमिति शेषः। अयुङ्क्त=नियुक्तवान्, सः = मान्यः, वर्णिलिङ्गी = ब्रह्मचारिस्वरूपधारी, नान्यो मां लोकप्रकृतिपरीक्षकं जानातु, अपि तु साधुरूपमवलोक्य मत्तो किमप्यनाशङ्क्य स्वयथार्थस्वभावं प्रकाशयतु, इति धिया कपटब्रह्मचारिवेषधर इत्यर्थः। विदितः=ज्ञाताखिलज्ञातव्यः, वनेचरः = आरण्यकः, द्वैतवने=एतन्नाम्ना विदिते विपिने, युधिष्ठिरम्=ज्येष्ठपाण्डवमेतन्नामानम् प्रति, समाययौ = समागतः। अस्मिन् सर्गे "वंशस्थसंज्ञं" वृत्तम्। तल्लक्षणञ्च "जतौ तु वंशस्थमुदीरितं जरौ।" यथा—

| ज. | त. | ज. | र. |
|---|---|---|---|
| ।ऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ |
| 'श्रियः कु— | रूणाम— | धिपस्य | पालनीम्'। |

समवृत्तत्वाच्चतुर्ष्वपि पादेषु समानमेव लक्षणं ज्ञेयमिति॥ १॥

**समासो—व्युत्पत्तिश्च**—अधिपातीति अधिपः, तस्याधिपस्य। पाल्यतेऽनया, इति पालनी, तां तालनीम्। वर्णः प्रशस्तिरस्यास्तीति वर्णी, तस्य लिङ्गम्, वर्णिलिङ्गम्, तदस्तीति वर्णिलिङ्गी। वने चरतीति वनेचरः। युधि स्थिरो युधिष्ठिरः। द्वे इते गते यस्मात्तद्द्वीतं द्वीतमेवद्वैतं तच्च वनं द्वैतवनम् तस्मिन् द्वैतवने॥ १॥

**व्याकरणम्**—वेदितुम् = विद + तुमुन्। अयुङ्क्त = युज् + लङ्, समाययौ = सम् + आङ् + या + लिट्॥ १॥

**वाच्यान्तरम्**—दुर्योधनस्य प्रजापालनपद्धतिमवगन्तुं युधिष्ठिरेण योऽयुज्यत, तेन वर्णिलिङ्गिना वनेचरेण द्वैतवने युधिष्ठिरः समायये॥ १॥

**कोषः**—'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया।' इत्यमरः। 'कुरुवर्षकुरुश्चन्द्रवंशीयोऽपि नृपः कुरुः'। 'अधिभूर्नायको नेता प्रभुः परिवृढोऽधिप' इत्यमरः। 'प्रजा स्यात्सन्ततौ जने' इत्यमरः। 'वृत्तिः प्रवृत्तिराख्याता वृत्तिर्वचनमुच्यते' 'वृत्तिर्वार्ता वृत्तमपि'। 'वनेचरो वनचरो वनप्रिय इति स्मृतः'॥ १॥

**सारार्थः**—यदा कौरवेश्वरेण दुर्योधनेन द्युतक्रीडया सव्याजं पराजितो युधिष्ठिरो राज्यप्रभृति सर्वस्वं हारयित्वा भीमादिभिरनुजैर्द्रौपद्या स्त्रिया चानुगतो द्वादशवर्षात्मके गुप्तवनवासे

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation, Kolkata. Digitization: eGangotri.


वसन्नास्ते, तदानीं तस्य मानसीत्थं विचार उत्पन्नः स दुर्जनो दुर्योधनः कथमिव राज्यं करोति, नयेनानयेन वेति ज्ञातव्यमित्यतस्तत्रत्यमेकं गूढचरोचिताचारचतुरं वनेचरं दुर्योधनस्य राज्यशासनपद्धतिज्ञानाय प्रेषितवान् । स च ब्रह्मचारिवेषं सर्वविश्वासयोग्यं धृत्वाऽर्थात् 'नायमस्मद्गोप्यविषयज्ञानाशया कोऽपि युधिष्ठिरस्य गूढचर' इति यथा कौरवाणां मनसि शङ्का न भवेत्तथा विधाय, तत्र गत्वा सर्वमुदन्तमशेषेणावगम्य युधिष्ठिराय तदादेशकारिणे निवेदनार्थं द्वैतवने समागतः ॥ १ ॥

भाषाऽर्थः—जब महाराज युधिष्ठिर अपने चचेरे भाई दुर्योधन के कपट भरे जूआ के खेल से हार कर सपरिवार द्वैतवन में रहकर बारह वर्ष का गुप्तवास निपटाते थे, उस समय अपने विरोधी दुर्योधन के शील, और 'कैसे प्रजाओं को पालता है' यह समझने के लिये जिस ब्रह्मचारी के वेशवाले वनचर को भेजा था, वह वहां जाकर, बिल्कुल हाल समझ कर जहां कि द्वैतवन में युधिष्ठिर थे, वहां पहुँचा ॥ १ ॥

सम्प्रति तत्कालोचितत्वमादेशयंस्तस्य तद्गुणसम्पन्नत्वमादर्शयन्नाह—

**कृतप्रणामस्य महीं महीभुजे जितां सपत्नेन निवेदयिष्यता ।**
**न विव्यथे तस्य मनो न हि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः ॥२॥**

**कृतप्रणामस्येति ।** कृतप्रणामस्य तत्कालोचितत्वात्कृतनमस्कारस्य, सपत्नेन रिपुणा दुर्योधनेन । 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः । जितां स्वायत्तीकृतां महीं महीभुजे युधिष्ठिराय क्रियाग्रहणात्सम्प्रदानत्वम् । निवेदयिष्यतो ज्ञापयिष्यतः । 'लृटः सद्वा' इति शतृप्रत्ययः । तस्य वनेचरस्य मनो न विव्यथे । कथमीदृगप्रियं राज्ञे विज्ञापयामीति मनसि न चचालेत्यर्थः । 'व्यथ भयचलनयोः' इति धातोर्लिट् । उक्तमर्थमर्थान्तरन्यासेन समर्थयते—न हीति हि यस्मात् । हितमिच्छन्तीति हितैषिणः स्वामिहितार्थिनः पुरुषा मृषा मिथ्याभूतं प्रियं प्रवक्तुं नेच्छन्ति अन्यथा कार्यविघातकतया स्वामिद्रोहिणः स्युरिति भावः । 'अमौढ्यममान्द्यममृषाभाषित्वमभ्यूहकत्वं चे' ति चारगुणाः, इति नीतिवाक्यामृते ॥ २ ॥

**अन्वयः**—कृतप्रणामस्य, सपत्नेन, जितां, महीं महीभुजे, निवेदयिष्यतः, तस्य, मनः, न, विव्यथे । हि, हितैषिणः, मृषा, प्रियं, प्रवक्तुं, न, इच्छन्ति ॥ २ ॥

**सुधा**—कृतप्रणामस्य = विहितनमस्कारस्य, कृताभिवादनस्येत्यर्थः । सपत्नेन=शत्रुणा, दुर्योधनेनेत्यर्थः । जितां = व्याजद्यूतेनात्मसात्कृताम् , महीम् = पृथ्वीम् , महीभुजे = भूपतये, युधिष्ठिरायेत्यर्थः । निवेदयिष्यतः=निवेदयितुं विज्ञापयितुमिच्छतः, भवतो हस्तान्निजहस्ते राज्यं कृत्वा एवमेव स राज्यं प्रशास्तीति कथयिष्यत इत्यर्थः । तस्य=पूर्वप्रेषितस्य वनेचरस्य, मनः= मानसम् , हृदयमित्यर्थः । न, विव्यथे=न व्यथितम् , अहो कथमेवं शत्रुप्रशंसां प्रभवे निवेदयामीत्येवं मनागपि मनो न विचलितं, न वा भयान्वितं जातम् । हि=यतः, यस्मात्कारणात् , हितैषिणः=प्रभुकल्याणकरेच्छवः, भृत्याः आज्ञाप्या इति यावत् । मृषा=मिथ्यात्मकम् , कपोलकल्पितमिति भावः । प्रियं = श्रवणसुखदं वचनम् , प्रवक्तुम् = निवेदयितुम् , न=न अमादपि, इच्छन्ति = अभिलषन्ति, स्वप्नेऽपीति शेषः । . मिथ्या तु मिथ्यैव, सत्यं सत्यमेव, तेन मिथ्या-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रियवचननिवेदनेन यथार्थां विषयस्थितिमज्ञात्वा नरपतिः प्रमत्तो भवन् राज्यात्पतति, तात्कालिकमप्रियमपि वचनं निशम्य, तत्प्रतीकारतत्परो राजा न जातु वैरिवशङ्गतो भवति, अतो गूढचरस्यायं मुख्यो धर्मोऽस्ति, यत्स्वामिनेऽसत्यं प्रियं न निवेदनीयमिति भावः। अत एवोक्तं 'सत्यं ब्रूयात्प्रियं ब्रूयात' इति। अनेन यथार्थो भृत्यसमुदाचारो वर्णितः। एवम् 'अमौ-ढ्यममान्द्यममृषाभाषित्वमभ्यूहत्वञ्चेति चारगुणा—' इति नीतिवाक्यामृते कथितम्॥ २॥

**समासः**—कृतः प्रणामो येन सः कृतप्रणामस्तस्य कृतप्रणामस्य। महीं भुनक्तीति महीभुक् तस्मै महीभुजे। हितमिच्छन्तीति हितैषिणः॥ २॥

**व्याकरणम्**—विव्यथे=व्यथ + लिट्। इच्छन्ति=इष् + लट्॥ २॥

**वाच्यान्तरम्**-वनेचरस्य मनसा न विव्यथे, हितैषिभिरनुचरैर्मृषा प्रियं न प्रवक्तुमिष्यते॥२॥

**कोषः**—'गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही'—इत्यमरः। 'पार्थिवो भूपतिर्भूपो महीभुक् क्ष्मापतिर्नृपः'। 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः। 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मन' इत्यमरः। 'मृषा मिथ्या तु वितथे' इत्यमरः॥ २॥

**सारार्थः**—स च वनेचरो दूरतो युधिष्ठिरं प्रणम्य यथादृष्टं प्रभुद्रोहिप्रशंसापरमपि दुर्योधनकृतराज्यशासनविधिं प्रवक्तुमुद्यतः। परन्तु कथमेवं शत्रूत्कर्षं स्वप्रभवे निवेदयामीति मनागपि तस्य मनो न कम्पितम्। यतो हितेच्छोर्भृत्यस्य स्वामिनं प्रति सत्यकथनमेव परो धर्मः। कथमन्यथा भृत्यस्य विश्वासः। तथा शत्रुकृतिप्रतीकारः क्रियते स्वामिभिरिति॥ २॥

भाषाऽर्थः—**किया है प्रणाम जिसने, और दुर्योधन से वशीकृत राज्य के बारे में कहने की इच्छा है जिसको, ऐसे उस वनेचर का चित्त जरा भी विचलित नहीं हुआ। इसलिये कि मालिक के कल्याण चाहने वाले नौकर कभी झूठी मीठी बात मालिक से नहीं कह सकते॥ २॥**

तथापि प्रियार्हे राज्ञि कटुनिष्ठुरोक्तिर्न युक्तेत्याशङ्क्य स्वाम्यनुज्ञया न दुष्यतीत्याशयेनाह—

**द्विषां विघाताय विधातुमिच्छतो रहस्यनुज्ञामधिगम्य भूभृतः।**
**स सौष्ठवौदार्यविशेषशालिनीं विनिश्चितार्थामिति वाचमाददे॥३॥**

**द्विषामिति**। रहस्येकान्ते स वनेचरो द्विषां शत्रूणाम्। कर्मणि षष्ठी। विघाताय। विहन्तुमित्यर्थः। 'तुमर्थाच्च भाववचनात्' इति चतुर्थी। 'भाववचनाश्च' इति तुमर्थे घञ्प्रत्ययः। अत्र तादर्थ्यमपि न दोषः। तथापि प्रयोगवैचित्र्यविशेषस्याप्यलङ्कारत्वादेवं व्याचक्षते। विधातुं व्यापारं कर्तुमिच्छतः। 'समानकर्तृकेषु तुमुन्' द्विषो विहन्तुमुद्युक्तस्यानस्येत्यर्थः। अत एव भूभृतो युधिष्ठिरस्यानुज्ञामधिगम्य। सुष्ठु भावः सौष्ठवं शब्दसामर्थ्यम्। सुष्ठुशब्दादव्ययादुद्गात्रादित्वादञ्प्रत्ययः। उदारस्य भाव औदार्यमर्थसम्पत्तिः तयोर्द्वन्द्वः सौष्ठवौदार्ये। अत्रौदार्यशब्दस्याजाद्यदन्तत्वेऽपि 'लक्षणहेत्वोः क्रियायाः' इत्यत्राल्पस्वरस्यापि हेतुशब्दस्य पूर्वनिपातमकुर्वता सूत्रकृतैव पूर्वनिपातस्य नित्यत्वज्ञापनान्न पूर्वनिपातः। उक्तं च काशिकायाम्—'अयमेव लक्षणहेत्वोरिति निर्देशः। पूर्वनिपातव्यभिचारचिह्नम्' इति। त एव विशेषः। तयोर्वा विशेषः।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तेन शालते इति सौष्ठवौदार्यविशेषशालिनी ताम् । ताच्छील्ये णिनिः । विनिश्चितार्थां विशेषतः प्रमाणतो निर्णीतार्थामिति वक्ष्यमाणरूपां वाचमाददे स्वीकृतवान् । उवाचेत्यर्थः ॥ ३ ॥

**अन्वयः**—सः, द्विषां, विघाताय, विधातुम्, इच्छतः, भूभृतः, रहसि, अनुज्ञाम्, अधिगम्य, सौष्ठवौदार्यविशेषशालिनीं, विनिश्चितार्थां, इति, वाचम्, आददे ॥३॥

**सुधा**—सः = वनेचरः, विवक्षुरिति शेषः । द्विषाम् = शत्रूणाम्, विघाताय = नाशाय, विधातुम् = विधानं कर्तुम्, येनोपायेन शत्रुसंहरणं भवेत्तं प्रकर्तुमित्यर्थः । इच्छतः = अभिलषतः, भूभृतः, = भूपतेः, युधिष्ठिरस्येति शेषः । रहसि = एकान्ते, निर्जने इति यावत्, अनुज्ञाम् = आज्ञाम्, अधिगम्य = प्राप्य, अर्थात् 'भो वनेचर ! तत्र गत्वा दुर्योधनस्य राज्यशासनपद्धतिं सम्यगवभ्यागच्छ' इत्येवंरूपामाज्ञां शिरसि धृत्वा, सौष्ठवौदार्यविशेषशालिनीम् = शब्दार्थगुणशोभिताम्, विनिश्चितार्थाम् = विशेषरूपेण प्रकटार्थाम्, स्पष्टार्थमिति यावत्, इति वक्ष्यमाणरूपाम्, वाचम् = वाणीम् , आददे = स्वीकृतवान्, उवाचेत्यर्थः ॥ ३ ॥

**समासः**—भुवं बिभर्त्तीति भूभृत् तस्य भूभृतः । सुष्ठु भावः सौष्ठवम्, उदारस्य भाव औदार्यम्, सौष्ठवं चौदार्यञ्च सौष्ठवौदार्ये, तयोः सोष्ठवौदार्ययोर्विशेषः सौष्ठवौदार्यविशेषः, तेन शालते शोभते या सा सौष्ठवौदार्यविशेषशालिनी, ताम्, सौष्ठवौदार्यविशेषशालिनीम । विशेषेण निश्चितः, निर्णीतोऽर्थो यस्यास्तां विनिश्चितार्थाम् ॥ ३ ॥

**व्याकरणम्**—विधातुम् = वि + धा + तुमुन् । आददे=आ + दा + लिट् । इच्छतः= इष् + शतृ ॥ ३ ॥

**वाच्यान्तरम्**—भूभृतोऽनुज्ञामधिगम्य तेन सौष्ठवौदार्यविशेषशालिनी विनिश्चितार्था इति वाक् आददे ॥ ३ ॥

**कोषः**—'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः । द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः' इत्यमरः । 'विविक्त-विजन-च्छन्न-निःशलाकास्तथा रहः' इत्यमरः । 'भूभृद्भूमिधरे नृपे' इत्यमरः ॥ ३ ॥

**सारार्थः**—कथं दुर्योधनो राज्यं करोति, कथं स पराजितो भविष्यतीत्येतत्तत्सर्ववृत्तान्तज्ञानायाज्ञापितो वनेचरस्तत्र गत्वा सर्वमवगम्य, तत आगत्य युधिष्ठिरं प्रति शब्दार्थचमत्कारलसितं वचनं समुवाच ॥ ३ ॥

**भाषाऽर्थः**—शत्रुओं के नाश करने के लिये उपाय करने की इच्छा रखने वाले महाराज युधिष्ठिर की गुप्त रीति से आज्ञा पाकर वनेचर वहां सब कुछ समझ कर शब्द, और अर्थों के गुणों से पूर्ण वाक्य युधिष्ठिर से बोला ॥ ३ ॥

प्रथमं तावदप्रियनिवेदकमात्मानं प्रत्यक्षोभं याचते—

**क्रियासु युक्तैर्नृप ! चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः ।**
**अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः ॥४॥**

**क्रियास्विति ।** हेनृप ! क्रियासु कृत्यवस्तुषु युक्तैर्नियुक्तैरनुजीविभिर्भृत्यैः । चरादिभि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रित्यर्थः। चरन्तीति चराः। पचाद्यच्। त एव चाराः। चरेः पचाद्यजन्तात्प्रज्ञादित्वादण्प्रत्ययः। त एव चक्षुर्येषां ते चारचक्षुषः। 'स्वपरमण्डले कार्याकार्यावलोकनं चाराश्चक्षूंषि क्षितिपतीनाम्' इति नीतिवाक्यामृते। प्रभवो निग्रहानुग्रहसमर्थाः स्वामिनो न वञ्चनीया न प्रतारणीयाः। सत्यमेव वक्तव्या इत्यर्थः। चारापचारे चक्षुरपचारवद्राज्ञां पदे पदे निपात इति भावः। अतोऽप्रतार्यत्वाद्धेतोः। असाध्वप्रियं साधु प्रियं वा मदुक्तमिति शेषः। क्षन्तुं सोढुमर्हसि। कुतः। हितं पथ्यं मनोहारि प्रियं च वचो दुर्लभम्। अतो मद्वचोऽपि क्षन्तव्यमित्यर्थः॥ ४॥

**अन्वयः**—हे नृप !, क्रियासु, युक्तैः, अनुजीविभिः, चारचक्षुषः, प्रभवः, न वञ्चनीयाः। अतः, असाधु, वा साधु, क्षन्तुम्, अर्हसि। हितं, मनोहारि च, वचः, दुर्ल्लभम् (भवति)॥४॥

**सुधा**—हे नृप ! =नरेश !, युधिष्ठिर !, क्रियासु=कर्त्तव्यविषयेषु, युक्तैः नियुक्तैः, संयोजितैरिति शेषः। अनुजीविभिः=अनुचरैः, भृत्यैरित्यर्थः। चारचक्षुषः=गूढचरदृशः, चारनयना इति शेषः। प्रभवः=स्वामिनः, न वञ्चनीयाः=न प्रतारणीयाः, न हि मिथ्यावाक्यैस्तत्कालश्रवणप्रियैर्वञ्चनीया इत्यर्थः। अतः=अस्मात्कारणात्, (यदि मन्निवेद्यमानं वचः) असाधु=असम्यक्, अप्रियमित्यर्थः। वा साधु=सम्यक्, प्रियं श्रवणहारीति यावत् (भवेत्, तत् त्वम्, सेवकोक्तकोमलोक्तिश्रवणयोग्योऽपि, ममाप्रियमपि तत्रत्यं सत्यमुदन्तं, निगद्यते, तत्) क्षन्तुम्=सोढुम्, अर्हसि=योग्योऽसि। (अहो सत्यमपि प्रियमेव प्रयोक्तव्यम्, तदा त्वया कथमप्रियं सत्यं वक्तुमुद्यतोऽसीति चेत्तदाह) हितं=परिणामकल्याणकरम्, (तथा) मनोहारि=सद्यःप्रियम्, वचः=वचनम्, दुर्ल्लभम्=दुःप्रयोज्यम्, अर्थादुक्तमिथोविरुद्धगुणद्वयवद्वचनप्रयोगे प्रवीणा अपि मनीषिणो विचारणपरायणा भवन्ति, अस्मादृशामाजन्मवनवृत्तिनां कथैव का, नियतमप्रियमेव मद्वचो भविष्यतीति पूर्वमपराधक्षमापनं सर्वथा समुचितमिति भृत्यस्योचितः परमः शिष्टाचार इति॥४॥

**समासः**—चरन्तीति चराः, चरा एव चाराः, चारा एव चक्षूंषि येषां ते चारचक्षुषः। मनो हरतीति मनोहारि। दुःखेन लभ्यते यत्तद्दुर्लभम्॥ ४॥

**व्याकरणम्**—वञ्चनीयाः=वञ्च+अनीयर्। क्षन्तुम्=क्षम्+तुमुन्। अर्हसि=अर्ह+लट्॥४॥

**वाच्यान्तरम्**—क्रियासु युक्ता अनुजीविनः, चारचक्षुषः प्रभून् न वञ्चयेयुः। अतः असाधु वा साधु वचनम् त्वया अर्ह्यते। हितेन मनोहारिणा वचसा दुर्लभेन भूयते॥ ४॥

**कोषः**—'राजा तु प्रणीताशेषसामन्तः स्यादधीश्वरः। चक्रवर्ती सार्वभौमो नृपोऽन्यो मण्डलेश्वरः' इत्यमरः। 'अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः' इत्यमरः। 'सेवकार्थ्यनुजीविनः' इत्यमरः॥ ४॥

**सारार्थः**—कार्यमात्रे नियुक्तैः सेवकैः सर्वथा प्रभवे सत्यमेव वचो निवेद्यम्। सत्यवचनप्रयोगशीलैरेव भृत्यैः स्वामिनो नयनवन्तो भवन्ति। असत्यभाषणैर्भृत्यैः प्रमादिनो नृपाः—अन्धा एव। यथा अन्धः कूपे पतति, तथाऽयथार्थकथनशीलैश्चरैः सेवितो भूपः शत्रुप्रपञ्चकूपे पतति। अतो न कदापि मिथ्यावचनं निवेदनीयं सेवकैः। तथा चाप्रियमपि सत्यं भृत्यमुखोक्तं श्रोतव्यं स्वामिभिः। विनाऽनृतयोगेन सर्वं सर्वथा प्रियं न भवति। केवलं यथार्थस्थितिवर्णनात्मकं स्वाभाविकं वाक्यजालं न हि सर्वथा प्रियं भवतीति केवलप्रियवचनश्रवणादरे न विधेयो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



राज्यशासकैः । यदि परुषं सत्यं श्रुत्वा भृत्योपरि स्वामी कुप्येत्तदा भयात्सङ्कोचाद्भृत्यः कथं पुनः सत्यं कथयिष्यति । सत्याभावे कथं नरपतिः स्वापत्तिदूरीकरणार्थं यत्नं करिष्यति । तथा सति राज्यनाश एव फलम्, तस्मात्, भृत्येन सत्यं निवेदनीयम्, स्वामिनाऽपि सादरं सत्यं परुषमपि श्रोतव्यमिति भावः ॥ ४ ॥

भाषाऽर्थः—किसी काम का भार शिर पर लेकर नौकर को चाहिये कि मालिक को न ठगे, इस लिये मैं आप को सच सच बताता हूं । पर केवल सत्य बात मीठी नहीं होती, सो अगर मेरी बात कड़वी भी हो, तो आप कृपा कर उसको क्षमा कर सकते हैं । क्यों कि जो बात भली और मीठी भी हो, ऐसी बात दुर्लभ हैं, उसमें भी मेरे जैसे भिल्ल वनैले आदमी के लिये तो बिल्कुल असम्भव ही है ॥ ४ ॥

तर्हि तूष्णीभाव एव वरमित्याशङ्क्याह—

**स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किंप्रभुः ।**
**सदाऽनुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः ॥ ५ ॥**

**स इति ।** यः सखाऽमात्यादिरधिपं स्वामिनं साधु हितं न शास्ति नोपदिशति । 'अविशासि—' इत्यादिना शासेर्दुहादिपाठाद् द्विकर्मकत्वम् । स हितानुपदेष्टा । कुत्सितः सखा किंसखा । दुर्मन्त्रीत्यर्थः । 'किमः क्षेपे' इति समासान्तप्रतिषेधः । तथा यः प्रभुर्निग्रहानुग्रहसमर्थः स्वामी हितादाप्तजनाद्धितोपदेष्टुः सकाशात् । 'आख्यातोपयोगे' इत्यपादानात्पञ्चमी । न संशृणुते न शृणोति हितमिति शेषः । 'समो गम्यृच्छि—' इत्यादिना सम्पूर्वाच्छृणोतेरकर्मकादात्मनेपदम्, अकर्मत्वं वैवक्षिकम् । स हितमश्रोता प्रभुः किंप्रभुः कुत्सितस्वामी पूर्ववत्समासः । सर्वथा सचिवेन वक्तव्यं श्रोतव्यं स्वामिना । एवं च राजमन्त्रिणोरैकमत्यं स्यादित्यर्थः । ऐकमत्यस्य फलमाह—सदेति । हि यस्मान्नृपेषु अमा सह भवा अमात्यास्तेषु च । 'अव्ययात्त्यप्' । अनुकूलेषु परस्परानुरक्तेषु सत्सु सर्वसम्पदः सदा रतिमनुरागं कुर्वते कुर्वन्ति । न जातु जहतीत्यर्थः । अतो मया वक्तव्यं त्वया च श्रोतव्यमिति भावः । अत्रैवं राजमन्त्रिणोर्हितानुपदेशतदश्रवणनिन्दासामर्थ्यसिद्धे रैकमत्यलक्षणकारणस्य निर्दिष्टस्य सर्वसम्पत्सिद्धिरूपकार्येण कारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । तदुक्तम्—'सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः' इति ॥ ५ ॥

**अन्वयः—**यः, अधिपं, साधु, न, शास्ति, स, किं, सखा ? वा किंसखा, यः हितात्, न, संशृणुते, स, किं, प्रभुः ? वा किंप्रभुः । हि, सदा, अनुकूलेषु, नृपेषु, अमात्येषु, च, सर्वसम्पदः, रतिं, कुर्वते ॥ ५ ॥

**सुधा—**यः=कश्चित्, सखा=अमात्यादिः, अधिपं=प्रभुम्, स्वस्वामिनमित्यर्थः । साधु= सम्यक् परिणामहितकरं वचनमित्यर्थः । न=नहि, शास्ति=उपदिशति, सः=असम्यगुपदेष्टा जनः किं सखा ?=किं विचारकः, ? नासौ सखेत्यर्थः । वा किंसखा=कुत्सितामात्यः, तदुपदेशेन प्रभुः पतत्येव राज्यादित्यर्थः । ( तथा च ) यः=कश्चित्, प्रभुः, हितात्=हितोपदेशकात्, येनोपदेशेन न कदापि पराभवं प्राप्नुयात्तादृशोपदेशदातुरित्यर्थः । जनाद्वाऽमात्यादेरिति शेषः । न संशृणुते=

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



नोपदेशं शृणोति, हितवाक्यस्य प्रायः कटुत्वादुपेक्षां करोति, सः=हितवचनश्रवणविमुखः किं प्रभुः ?=न प्रभुरित्यर्थः । वा किंप्रभुः=कुत्सितप्रभुः, अविवेकवान् स इत्यर्थः । ( अत एव मया भवता चोक्तनीति पालनीये, अन्यथाशिष्टाचारविच्छेदापत्तिः सङ्गच्छेत । अहो तादृशनियमपालनेन केवलं शिष्टाचाररक्षणमेव फलमपि तु महांल्लाभो विभवस्थैर्याभिलाषिणां भवतीत्याह— ) हि=यस्मात् कारणात्, सदा=सर्वदा, सततमित्यर्थः । अनुकूलेषु=अविरुद्धेषु, अन्योन्यानुरक्तेषु नृपेषु=स्वामिषु, अमात्येषु=मन्त्रिषु, च=अपि, मन्त्रिणोऽप्रियमपि वचनं श्रुत्वा भूपो भेषजमिव गृह्णीयात् न कदाचित्कुप्येत् । एवं स्वामिनोऽप्यप्रियमपि वाक्यं निशम्यामात्योऽपि न क्रोधं कुर्यादिति भावः । तथा सति, सर्वसम्पदः=सकलसम्पत्तयः, रतिम्=अनुरागम्, सदा स्थित्यभिलाषामित्यर्थः । कुर्वते=कुर्वन्ति । मिथोऽनुरागरज्जुबद्धेषु नृपामात्येषु न कदाऽपि राज्यलक्ष्मी-र्मुञ्चतीत्यर्थः ॥ ५ ॥

**समासः**—सर्वाः सम्पदः सर्वसम्पदः ॥ ५ ॥

**व्याकरणम्**—शास्ति=शास्+लट् । संशृणुते+सम्+श्रु+लट् । कुर्वते+कृ+लट्॥५॥

**वाच्यान्तरम्**—येन अधिपो न साधु शिष्यते, तेन किंसख्या भूयते, येन हितान्न संश्रूयते, तेन किंप्रभुणा भूयते । हि सदाऽनुकूलेषु नृपेष्वमात्येषु, सर्वसम्पद्भिः, रतिः क्रियते ॥ ५ ॥

**कोषः**—'वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत्' इत्यमरः । 'किं पृच्छायां जुगुप्सने' इत्यमरः । 'सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्' इत्यमरः । 'हि हेताववधारणे' इत्यमरः । 'अथ सम्पदि । सम्पत्तिः श्रीश्च लक्ष्मीश्च' इत्यमरः ॥ ५ ॥

**सारार्थः**—य एवमात्यादेरुपदेशं श्रुत्वा स्वीकरोति स योग्यः स्वामी, य एव प्रभुं हितवाक्यं वदति स एव योग्योऽमात्यादिः । अत एवान्यान्योनुरागवतोः तयोर्भवने गुणवद्धत्र राज्य लक्ष्मी र्नान्यतो गन्तुं पदमेकमप्युत्थापयति ॥ ५ ॥

भाषाऽर्थः—**जो कोई अपने मालिक को हित की बातों का उपदेश नहीं देता, वह क्या मन्त्री है ? कभी नहीं, या वह खराब नौकर है । ऐसे ही जो मालिक अपने हितचिन्तक मन्त्री आदिकों की बात नहीं सुनता, क्या वह मालिक है ? कभी नहीं । या वह नीच मालिक है । क्यों कि हरवक्त आपस में मेल रखते हुए राजा और मन्त्रियों में हर एक तरह की सम्पत्तियां वनी रहती हैं ॥ ५ ॥**

सम्प्रति स्वाहङ्कारं परिहरति—

**निसर्गदुर्बोधमबोधविक्लवाः क्व भूपतीनां चरितं क्व जन्तवः ।**
**तवानुभावोऽयमवेदि यन्मया निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥ ६ ॥**

**निसर्गेति** । निसर्गदुर्बोधं स्वभावदुर्ग्रहम् । 'ईषद्दुः—' इत्यादिना खल्प्रत्ययः । भूपतीनां चरितं क्व । अबोधविक्लवा अज्ञानोपहता जन्तवः । मादृशाः पामरजना इत्यर्थः । क्व । नोभयं सङ्घटत इत्यर्थः । तथापि निगूढतत्त्वं संवृतयाथार्थ्यं विद्विषां नयवर्त्म पाड्गुण्यप्रयोगः । 'सन्धिविग्रहयानानि संस्थाप्यासनमेव च । द्वैधीभावश्च विज्ञेयाः षड्गुणा नीतिवेदिनाम् ॥' इत्यादि-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

